# સંસ્કૃત

## દ્વિતીય પુસ્તક

પરિચય પદ્ધતિ અનુસાર

યોજક
નૃસિંહપ્રસાદ કાલિદાસ ભટ્ટ

પ્રકાશક
શ્રી દક્ષિણામૂર્તિ વિદ્યાર્થીભવન
ભાવનગર

બીજી આવૃત્તિ

સંવત ૧૯૭૯


મુદ્રક

રામદાસ મોહનદાસ ગાંધી,

નવજીવન મુદ્રણાલય: અમદાવાદ.

પ્રકાશક

નૃસિંહપ્રસાદ કાળિદાસ ભટ્ટ,

શ્રી દક્ષિણામૂર્તિ વિદ્યાર્થીભવન: ભાવનગર.

# પ્રસ્તાવના

પરિચય પદ્ધતિ અનુસાર લખેલું આ સંસ્કૃતનું બીજું પુસ્તક છે. પહેલા પુસ્તકમાં આંકેલી યોજના આ પુસ્તકમાં ચાલુ છે.

પહેલું પુસ્તક વિદ્યાર્થી શીખી રહે ત્યાર પછી સંસ્કૃત ભાષાંનાં સુભાષિતો તથા સહેલાં સ્તોત્રોમાં* તેનો પ્રવેશ થવાની જરૂર છે.

પુનાવાળા શ્રી ઓક તરફથી બહાર પડેલી સુબોધ પાઠાવલિ જો કે ભાંડારકર પદ્ધતિ અનુસાર શીખવતાં રૂપોને દૃઢ કરાવવા માટે યોજવામાં આવી છે, છતાં ચાલાક શિક્ષક પહેલા પુસ્તકનો પરિચય થયા પછી તેનો સદુપયોગ

---

* આવાં સ્તોત્રોનો એક સંગ્રહ શ્રી દક્ષિણામૂર્તિ ભવન તરફથી છપાય છે.

કરી શકે. આ બીજું પુસ્તક શરૂ થાય તે પહેલાં આટલું તો જરૂર કરી લેવું જોઇએ.

બીજા પુસ્તકમાં સંધિ તથા સમાસને સ્થાન આપ્યું છે. સંધિ કરવી એ તો ભાષાને બોલવાની સહજ સરલતાનો પણ પ્રશ્ન છે; એટલે સંધિ કરવી ન કરવી એ બાબતમાં બહુ છુટ રાખી છે.

સમાસ એ સંસ્કૃત ભાષાની ધ્યાન ખેંચે એવી વિશિષ્ટતા છે. એ સમાસોમાં ભાષાનું સામર્થ્ય રહેલું છે, એટલે સમાસનો પરિચય આ પુસ્તકમાં કરાવવો યોગ્ય ધાર્યો છે.

આ પુસ્તકમાં પણ પ્રથમ પુસ્તકની માફક વિદ્યાર્થી સીધી રીતે વ્યાકરણ જાણતો નથી. બન્ને પુસ્તકમાં ઉદ્દિષ્ટ ભાષાપરિચય થયા પછી એ ભાષાની રચના વગેરેના નિયમોની રેખા ત્રીજા પુસ્તકમાં આવે એવો ક્રમ રાખ્યો છે.

આ પુસ્તકને અન્તે મહાભારતના કર્ણ પર્વમાંથી બે પ્રસંગો વિદ્યાર્થીના વાચન-સમજણ માટે મુકયા છે. રામાયણ તેમજ મહાભારતના શુદ્ધ, સરલ ને ઉદાત્ત સાહિત્યને આપણી શાળાઓમાં હજુ સ્થાન મળ્યું નથી એ દિલગીરીની વાત છે ! પંચતન્ત્રની વાર્તાઓમાંથી કેટલીએક તો સારી છે જ, પણ એ તો વાર્તાઓ રહી. વળી આપણું બીજું શિષ્ટ સાહિત્ય ત્રીજા ચોથા ધોરણના વિદ્યાર્થીની મર્યાદાની બહાર છે, એટલે પણ મહાભારત રામાયણ જ તેમને વધારે ઉપયોગી થાય. અહીં મુકેલાં બે ચિત્રો વાંચીને જ વિદ્યાર્થી ન અટકે, પરન્તુ એવા બીજા સાહિત્ય તરફ આકર્ષાય એવી આશા રાખી છે.

આ બીજું પુસ્તક પૂરૂં થાય ત્યારે-થયા પહેલાં પણ બહુ વાંધો નથી-વિદ્યાર્થીને કોઇ

પણ મારું કાવ્ય ટીકા સાથે વાંચવાની શરૂઆત થવી જોઇએ. ટીકા વાંચીને સાહિત્ય સમજવાથી વિદ્યાર્થીનું ભાષા ઉપર પ્રભુત્વ જામી જશે. હું પોતે તો આ કામને માટે રઘુવંશના બીજા સર્ગ ઉપર મલ્લિનાથની ટીકાને વધારે પસંદ કરૂં છું—કવિની ખાતર, ભાષાની ખાતર, પ્રસંગની ખાતર તેમજ ટીકાની ખાતર.

આ બન્ને પુસ્તકો કેટલીએક રાષ્ટ્રીય શાળાઓમાં પાઠ્ય પુસ્તક તરીકે ચાલે છે એમ હું જાણું છું, પરન્તુ એક પાઠ્ય પુસ્તક તરીકે એના ગુણદોષ તેમજ શિખવતી વખતે જણાઇ આવે એવી તેની ત્રુટીઓ વિષે મને કોઇ કાંઇ કહેતું લખતું નથી; એટલે મને તો ભય એ છે કે કદાચ આ પુસ્તક માત્ર એક સંસ્કૃત રીડર તો નથી થઈ ગયું ! છતાં હું તો હજી

ઉપર લખ્યું તેવા વિવેચનની આશા રાખીને બેઠો જ છું.

નૃસિંહપ્રસાદ કાલિદાસ ભટ્ટ

# १

अहम् अटवीं गच्छामि ।

अहमटवीं गच्छामि ।

शिष्याः आचार्यमनुसरन्ति ।

मित्रमापदि न त्यजेत् सज्जनः ।

जडे शिष्ये वितरति विद्यामाचार्यः ।

पुत्रमुत्सङ्गे धारयति माता ।

शीतकिरणैः तर्पयति विश्वमिन्दुः ।

ऋषीणामुपदेशः सर्वथा हितकरः एव ।

नीरुजानामौषधैः किं प्रयोजनम् ।



२

भास्करस्यापराधं क्षाम्यामि ।

हरिलालस्यापराधं न क्षाम्यामि ।

कस्यायम् कन्दुकः ।

ममायम् कन्दुकः ।

नायम् कन्दुकः गोविन्दस्य ।

नायम् मम दण्डः ।

क्वास्ति ममासनम् ।

अत्रास्ति तवासनम् ।

तत्रास्ति लक्ष्मणस्यासनम् ।

इयं ललनाराधयति पशुपतिम्

सा बालागच्छत् देवगृहम् ।

नाचरेत् अविवेकं गुरुं प्रति ।

---

२

इन्दुं वियति न पश्यामि ।

न पश्यामीन्दुं वियति ।

वियतीन्दुं न पश्यामि ।

इन्द्रः स्वर्गं गच्छति ।

स्वर्गं गच्छतीन्द्रः ।

उपवनवृक्षात् मधु क्षरति ।

मधूपवनवृक्षात् क्षरति ।

क्व गच्छसीति मामवदत् चन्द्रकान्तः ।

---

१

रामः गच्छति ।

रामो गच्छति ।

ज्वलनो दहति ।

शिष्यो वदति ।

वृक्षो नम्रो भवति ।

पुत्रो जनकं प्रीणयति ।

छात्रो घटं जलेन पूरयति ।

वृक्षो झंझावातेन पतति ।

नरो डिम्भमाह्वयति ।

कुबेरो धनं रक्षति ।

कृष्णो बलरामस्य भ्राता ।

अश्वो मार्गे तिष्ठति ।

नृपो याचकाय धनं यच्छति ।

रामो रावणं जयति ।

मालाकारो लतायाः पुष्पाणि चिनोति ।

प्रह्लादो हरिं भजति ।



५

रामः कन्दुकेन क्रीडति ।

लक्ष्मणः खनति खनित्रेण ।

रथश्चक्राभ्याम् चलति ।

पथिकश्छायायाम् विश्राम्यति ।

शिष्यास्तरुमूले जलं सिञ्चति ।

तृषातः पिबति जलम् ।

सर्पः फणां विस्तारयति ।

निशाचरः शर्वर्याम् चरति ।

नरः पड् चौरान् ताडयति ।

भास्करः सवितारम् नमति ।

चन्द्रश्चकोरमाह्लादयति ।

रामश्च लक्ष्मणश्च मिथिलामगच्छताम् ।

कपोतस्तत्र निषीदति ।

को धन्यस्तृष्णायाः पारं गतः ।



६

लक्ष्मणोऽरण्यं गच्छति ।

रामोऽरण्यं गच्छति ।

धीमान्कालेऽनृतं न वदति ।

नृपोऽपराधिनम् दण्डयति ।

शिष्योऽध्ययने कुशलोऽस्ति ।

देहोऽयं महता पुण्येन कीलरचया ।

अयमाचार्य आगच्छति ।

धेनव आगच्छन्ति वनात् ।

कपोत आकाशात् अधः पतत् ।

बीजेभ्य उद्गच्छन्ति वृक्षाः ।

इह जगति क इच्छेत् पराजयं शत्रोः
न कोऽपि।

अयं वायस उलूकं पीडयति ।

दुष्यन्त एकदा कण्वाश्रममगच्छत् ।

चन्द्र ओषधीनां पतिः ।

रथ एकेन चक्रेण न चलति ।

बाल उत्संगे वर्तते मातुः ।



७

छात्राः गच्छन्ति ।

छात्रा गच्छन्ति ।

ब्राह्मणा घृतम् पिबन्ति ।

वीरा देशरक्षणार्थम् देहान् त्यजन्ति ।

नरा धर्मं न कदापि त्यजेयुः ।

आचार्या जाड्यम् हरन्ति ।

योधा नायकमनुसरन्ति ।

पाण्डवा अरण्येऽवसन् ।

पादपा भागीरथीतीरे रोहन्ति ।

छात्रा मम समीपमागच्छन्ति ।

नरा यशोऽभिवाञ्छन्ति ।

१०८४३



बाला रथ्यायाम् क्रीडन्ति ।

मधुकरा लतासु गुञ्जन्ति ।

धीरा विपदि न मुह्यन्ति ।

सुवर्णकारा हेम संशोधयन्ति ।

---

८

पाण्डवा अरण्यमगच्छन् ।

विहगा आकाशे डयन्ते ।

मरणकाले जना इष्टदेवं स्मरेयुः ।

नास्तिका जना ईश्वरं नैव मानयन्ति ।

पौरा उज्जयिनीं गच्छन्ति ।

कौरवा एतादृशं पापं कथं कुर्युः ।

चन्द्रमा ओषधीनां पतिः ।

छात्राः क्व गच्छन्ति ।

छात्राः शालां गच्छन्ति ।

योधाः समराङ्गणम् गच्छन्ति ।

बालाः खट्वायाम् खेलन्ति ।

नराश्चन्द्रमसं पश्यन्ति ।

ललनास्तारकाः पश्यन्ति ।

शाखामृगाः पतन्ति तरुशाखाभ्यः ।

नराः फलम् लभन्ते स्वकर्मणाम् ।

एते शिवभक्ताः शिवालयं गच्छन्ति ।

नाविका उडुपं समुद्रतटं नयन्ति ।



१

हरिर्यजति बहुद्रव्येण ।

कविर्गच्छति भोजराजवार्नाम् ।

कपिर्वृक्षात् वृक्षमुत्पतति ।

ऋषिरागच्छति तमसातीरात् ।

मनोरथानामगतिर्न विद्यते ।

बुद्धिर्यस्य बलं तस्य ।

मतिरेव बलाद्गरीयसी ।

श्रीः क्व वसति । श्रीर्वसति साहसे ।

गुरोरादेशं क उल्लंघयेत् पापः ।

तरोः शाखायां कोऽयं तिष्ठति ।

अग्नेर्ज्वाला मां दहति खलु ।

व्याघ्रवेदनां रोगी परमार्थेनो जानाति ।

हिमगिरेरुद्भवति भगवती पापमोचनी गङ्गा ।

तारकाभिर्विभाति रात्रिः ।

राकापतिश्चक्षुरानन्दयति ।

उदधेस्तीरे बालुकासु क्रीडन्ति बालाः ।

धूर्जटिः रक्षति पुष्पदन्तम् ।

धूर्जटी रक्षति पुष्पदन्तम् ।

शिशू रथ्यायाम् क्रीडति ।

हरी राजपुत्रैः सह क्रीडति ।



१०

ईश्वरस्येच्छा केवलं बलीयसी ।

दुष्यन्तस्येन्द्रेण सह सख्यम् ।

कस्येपुत्रयम् ।

नायम् ममेषुः ।

कस्यायम् तर्हि ।

भास्करस्येपुत्रयम् भवेत् ।

मूर्खस्योपदेशः प्रकोपाय । सज्जनस्यो-
पदेशः शान्तये ।

अध्यैणानि पूजयति शिष्यः ।

पार्थस्यैव बाणा मां पीडयन्ति नान्यस्य
कस्यचित् इत्यवदत् शान्तनवः ।

व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ।



११

कोऽत्ति तृणानि ।

तृणान्यत्ति हरिणः ।

कोऽत्ति पर्णानि ।

पर्णान्यत्ति तापसः ।

तृणान्यादायागच्छति किंकरः ।

कमलानि रोहन्ति सरसि ।

तृणान्युदकं भूमिर्वाक् च सूनृता सतां
गेहे कदाचिदपि नोच्छिद्यन्ते ।

न खल्वहं पापी ।

कोऽन्वयं तपस्वी जर्जरितवस्त्र आगच्छति ।

क्षुधातुरायै व्याघ्र्यै बोधिसत्त्वेन स्वदेहार्पणं कृतम् ।

इतरमनुष्येष्वीदृशी साधुता न संभवति ।



१२

दृषत् पतति ।

दृषद् हस्तात्पतति ।

हुतभुक् काष्ठं दहति ।

विपत् तपोनिष्ठं जनं न मोहयति ।

मरुत् पादपान् कम्पयति ।

दृषद्गिरेः पतति ।

हुतभुग् वृक्षं दहति ।

विपद् धीरं पुरुषं न मोहयति ।

नृपाद् दण्डमपेक्षतेऽपराधी नरः ।

चौराद् भयं न निर्धनस्य ।

राजकुलादागतोऽहम् ।

गिरिशिखरादवतरति मयूरः ।

---

१३

अम्बराच्चकोरोऽवतरति ।

हस्ताच्चापं त्यजति योधः ।

कूपाच्छात्रो निर्गच्छति ।

गिरिशिखराज्जटायू रावणमपश्यत् ।

ग्रामान्नरो बहिर्गच्छति ।

वाङ् न मे मधुरा ।

हुतभुङ् न दहति पाषाणम् ।

कस्मान्न त्वया हरिः पूजितः ।

बिडालाँस्ताडय ।

बिडालाँस्ताडयाम्यहम् ।

वानराँश्चित्रकूटे पश्यति दाशरथिः ।

प्रेक्षकाँश्चापभंगेन विस्मापयते रामः ।

१४

स जनो मामवदत् ।

स काकः पर्वताग्रे वसति ।

स पापः क्व गतः ।

एष गच्छति स पापः ।

एष भेकस्तडागे वसति ।

भो अर्जुन, एषोऽहम् रामशिष्यः कर्णः ।

भो आचार्य, एषोऽहम् भीमस्तव रथं संचूर्णयामि ।

भोः कण्व, पालयेमां बालां शकुन्तलाम् ।

भोः तपस्विन्, क्व गलितं ते तपः ।

भो जनक, पश्येमौ दशरथस्य पुत्रौ ।



१५

सीता गोदावरीपुलिने रमते।

युधिष्ठिरो द्रौपदीं भाषते।

हनूमान् सागरं उल्लंघयितुम् आरभते।

वत्स, कम्पते मे हृदयम्।

मोदकान् स्वादन्ते ब्राह्मणाः।

समित्पाणिः शिष्यः ब्रूते 'भो आचार्य, अभिवादये' इति।

स्पन्दते मे नयनम्। मम मनः आपदं शंकते।

गंगायां प्रभूतं जलं वर्तते।

दुराचारी स्वास्थ्यं न लभते।

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।

इतीहारमतैवासौ स्नेहस्तस्याः स तादृशः॥

'पुराऽत्रैव वैदेह्या सहाऽहम् अरमे' इति रामः
सीतायाः प्रियसखीं वासन्तीमवदत् ।

गांडीवस्य टंकारेण कौरवाणां हृदयानि अत्रेपन्त ।

तस्याः वचः श्रुत्वा पार्थः अभाषत ।

दूतः साकेतान्न्यवर्तते ।

गोदावर्याः पुलिने रामश्चिरकालम्
जानक्या सह अरमत ।

वत्स, मोदस्व मोदस्व इति कलापिनं ब्रूते
विदेहराजपुत्री ।

विश्वामित्रः सभां प्रविश्य उवाच,
'विजयस्व राजन्' इति ।

महता प्रयत्नेनाऽपि सिकतासु तैलं न लभेत ।

शिष्यस्य अविनयं गुरुः न सहेत ।

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः।
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम्॥

१६

पुस्तकम् पतितम् ।

अद्यैव लक्ष्मणो गतः ।

क्नु खलु स गतः ।

स ऋष्यमूकं प्रति गतः ।

भास्करो वृक्षमूले स्थितः ।

रामेण किं कृतम् ।

रामेण मम कर्णे किमपि कथितम् ।

एष खलु द्यूतकरो राजपुरुषैर्बद्धोऽस्ति।

भो भो भट्टारकाः, दशसुवर्णस्य रुद्धोऽयम्
पुरुषः प्रपलायितः प्रपलायितः ।

तासामप्सरसां चतुर्दश कुलानि । एकं
भगवतः कमलयोनेर्मनसः समुत्पन्नम् । अन्यत्

वेदेभ्यः संभूतम् । अन्यत् पवनात् प्रसूतम् ।
अन्यत् अमृतादुन्मथ्यमानात् उत्थितम् ।
अन्यत् जलात् जातम् । अन्यत् अर्ककिरणेभ्यो
निर्गतम् अन्यत् सौदामिनीतः प्रवृत्तम् ।

आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ॥

आरूढमद्रीन् उदधीन् वितीर्णं
भुजंगमानां वसतिं प्रविष्टम् ।
ऊर्ध्वं गतं यस्य न चानुबन्धि
यशः परिच्छेत्तुमियत्तयालम् ॥



१७

गच्छन् अहं जलं पिबामि ।

जलं पिबन् अहम् लेखिन्या लिखामि ।

एकेन पादेन तिष्ठन् अहं मन्त्रजपं करोमि ।

एष मूर्खस्तिष्ठन् मूत्रयति ।

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।

हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥

दुर्विनीत, एतं निर्बलं शिष्यं प्रहरन् न लज्जसे ।

पथि गच्छन्तं पुरुषमिहाह्वय ।

धिक् छात्रान् ताडयन्तमाचार्यम् ।

पशुपतिं पूजयता रावणेन कमलस्थाने स्वकीयं नेत्रमर्पितम् ।

दिनेषु गच्छत्सु सा बाला कृशाङ्गी जाता ।

सूर्ये तपति तमिस्रा कथं दृष्टेरावरणाय भवति ।

कदा वाराणस्यां—

ममरकटिर्नीरोधसि वसन्

वसानः कौपीनं

शिरसि निदधानोऽञ्जलिपुटम् ।

अये गौरीनाथ

त्रिपुरहर शंभो त्रिनयन

प्रसीदेत्याक्रोशन्

निमिषमिव नेष्यामि दिवसान् ॥



१८

यस्मिन् जीवति जीवन्ति बहवः सोऽत्र जीवति ।

वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ॥

द्रोणे रणधुरां वहति भयस्य कोऽवकाशः ।

वृक्षं प्रेक्षमाणोऽहम् तिष्ठामि ।

मधुबिन्दुना समुद्रस्य माधुर्यं रचयितुमीहमानो

नरः कीदृशः खलु ।

अत्रान्तरे गाण्डीविना भणितम् । अरे कर्ण,

युष्माभिर्मम परोक्षे एकाकी पुत्रकोऽभिमन्यु

र्व्यापादितः । युष्माकं प्रेक्षमाणानामेनं कुमार-

वृषसेनं स्मर्तव्यशेषं नयामि ।

जीवतु तातपादेषु नवे दारपरिग्रहे ।

मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥

पत्तने विद्यमानेऽपि ग्रामे रत्नपरीक्षा ।

त्वया कथ्यमानमपि तद् न विश्वासं जनयति ।

---

१९

प्र०—कस्त्वम् ।

उ०—अहम् छात्रः श्रीदक्षिणामूर्तिभवनस्य ।

प्र०—किं तव नामाभिधानम् ।

उ०—गोकुलदास इति मे नामाभिधानम् ।

प्र०—किमर्थं त्वया स्वग्रामशालास्त्यक्त्वा अत्र दूरदेशे आगम्यते ।

उ०—अस्मिन् छात्रालये शोभनं राष्ट्रभावपोषकं चाध्ययनं क्रियते इति श्रुत्वा मया अत्र आगम्यते ।

प्र०—अत्रकृतं अध्ययनं विश्वविद्यालये विफलं भवति इति जनप्रवादः । तुभ्यं किं रोचते एतद् अध्ययनम् ।

स०—अथ किम् । विशेषतः रोचते मह्यम् एतत् अध्ययनम् । यतः विश्वविद्यालय-निरपेक्षं सत् जीवने साहायकं भविष्यति इति मे दृढा बुद्धिः।

प्र०—किं द्रव्यं त्वत्तः गृह्णाति आचार्यः अध्यापननिमित्तम् ।

स०—न किंचिदपि गृह्णाति आचार्यः तन्निमित्तम् । यत् दशरूप्यकान् प्रतिमासं यच्छामि तत् भोजनादिनिमित्तं न तु अध्यापननिमित्तम् ।

प्र०—कस्तव श्लाघ्यः सुहृत् अस्मिन् भवने ।

उ०—हरिलालनामा छात्रः मम हृदयंगमं मित्रम् अत्र ।

उ.१

प्र०—अपि विद्यते आचार्यस्य त्वयि स्नेहः।

उ०—न केवलं आचार्यस्य किन्तु सर्वेषामध्यापकानां अपि मयि अपूर्वः स्नेहः।

---

२०

प्र०—खड्गपाणयः के यूयम्।

उ०—खड्गपाणयो वयम् कौरवसैनिकाः।

प्र०—किं युष्माभिरुत्तरः कुमारः क्वापि दृष्टः।

उ०—न अस्माभिः क्वापि दृष्टः स विराट-
कुमारः।

प्र०—किं युष्माभिः क्लीवेषोऽर्जुनसमप्रभावः
कोपि सारथिर्दृष्टः।

उ०—अथ किम्। दृष्टोऽस्माभिः दीर्घमूर्धजः
क्लीवेष एकः सारथिः।

प्र०—तर्हि अस्मभ्यं कथयत केन मार्गेण
गतः स इति।

उ०—सावधानाः शृणुत । स सारथि-
र्मत्स्यचिह्नं रथं वाहयित्वा एतेन श्मशानमार्गेण गच्छन् अस्माभिर्दृष्टः ।

---

त्वं जीवितं त्वमसि मे हृदयं द्वितीयम्
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
यूयं वयं वयं यूयमित्यासीद् मतिरावयोः ।
किं जातमधुना येन यूयं यूयं वयं वयम् ॥
विश्वंभरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानाम्
येषां कुलेषु सविता च गुरुर्वयं च ॥

---

२१

एतौ हरिलाल: भास्करश्च क्व गच्छत: ।

हरिलालभास्करौ गुर्जराणां राजधानीं गच्छत: ।

एतौ लक्ष्मण: चीमनलालश्च किम् कुरुत: ।

लक्ष्मणचीमनलालौ नगरोपवने क्रीडत: ।

एते हरी राम: प्रद्युम्नश्च किमर्थं इतस्तत:
भ्रमन्ति ।

एते हरिरामप्रद्युम्ना आचार्येण शालाया बहि-
र्नि:सारिता इतस्ततो भ्रमन्ति ।

एते युधिष्ठिरो भीमोऽर्जुनो नकुल: सह-
देवश्च वल्कलानि गृहीत्वा क्व प्रस्थिता: ।

एते युधिष्ठिरभीमार्जुननकुलसहदेवा द्यूतावसाने
अरण्यं प्रस्थिता: ।

कृष्णार्जुनौ खाण्डववनं अदहताम् ।

कुशलवौ दृष्ट्वा दाशरथेश्चित्तक्षोभोऽभवत् ।

मूषकमार्जारयोः कथं संभवति मैत्री ।

इह जगति लुब्धकधीवरपिशुना मृगमीनसज्ज-

नानाम् अकारणवैरिणो भवन्ति ।

धर्मार्थकाममोक्षाणाम् यस्यैकोऽपि न विद्यते ।

अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥

आहारनिद्राभयमैथुनं च

सामान्यमेतत् पशुभिर्नराणाम् ।



२२

किम् श्वेतम् इदम् कमलम् ।

न खलु इदं श्वेतकमलम् । नीलकमलम् इदम् ।

किम् पीतम् इदम् अम्बरम् ।

न पीताम्बरमिदम् । रक्ताम्बरमिदम् ।

नाहं कटुवाक्यं कदाचिदपि ब्रवीमि ।

शीतोदकस्य पानमेव पथ्यं ग्रीष्मे ।

दुष्टजनाय उपदेशोऽपि न दातव्यः ।

दीनजनेषु साधवः दयां कुर्वन्ति ।

---

२३

दशरथपुत्रः रामचन्द्रः ।

पाण्डुपुत्रः अर्जुनः ।

कर्णतुल्यः दाता अद्यपर्यन्तं भुवि न जातः ।

न चोरचोर्यं न च राजहार्यं

न भ्रातृभाज्यं न च भारकारि ।

व्यये कृते वर्धत एव नित्यं

विद्याधनं सर्वधनप्रधानम् ॥

आकाशात्पतितं तोयं यथा गच्छति सागरं ।

सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥

चोरभयेन स्थाणुरपि मे चोरः भाति ।

शत्रुभीत: जयद्रथ आहवे अर्जुनात् सुदूरं
स्थित: एव ।

संसारतापतप्त: नर: सुखप्राप्त्यै इतस्तत: भ्रमति
न तु शुद्धवैराग्यं विना शान्ति लभते ।

साधुपुरुषचरित: एष मार्ग: यत् परकल्या-
णार्थम् स्वार्थत्याग: ।

अक्षविद्यानिपुणः युधिष्ठिरो द्यूते कौरवैः
पराजितः किम् ।

मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः
पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥

२४

पीतम् अम्बरं यस्यास्ति स पीताम्बरः ।

नीलः कण्ठो यस्यास्ति स नीलकण्ठः ।

त्रीणि कूटानि यस्य स त्रिकूटो नाम पर्वतः ।

शंखः पाणौ यस्य स देवः शंखपाणिः ।

कमलम् आसनं यस्य स देवः कमलासनः ।

अब्जं योनिर्यस्य स देवोऽब्जयोनिः ।

चत्वारो भुजा यस्य स देवश्चतुर्भुजः

त्रीणि लोचनानि यस्य स देवस्त्रिलोचनः ।

भाले चन्द्रो यस्य स देवो भालचन्द्रः ।

चक्रं पाणौ यस्य स देवश्चक्रपाणिः ।

एको दन्तो यस्य स देव एकदन्तः ।

लम्बम् उदरं यस्य स लम्बोदरः ।

चत्वारि मुखानि यस्य स चतुर्मुखः ।



२५

पीतम् उदकम् याभिस्ताः पीतोदका गावः ।

महत् बलं येषाम् ते महाबला योधाः ।

तपः धनम् येषां ते तपोधना यतयः ।

जितः श्वासो यैस्ते जितश्वासा योगिनः ।

अल्पा मतिर्यस्य स अल्पमतिः पुरुषः ।

जग्धं तृणम् यैस्ते जग्धतृणाः पशवः ।

पत्र हस्ते यस्य सः पत्रहस्तः अमात्यः ।

चन्द्रः मौलौ यस्य स चन्द्रमौलिः ।

गतं सत्त्वं यस्मात् स गतसत्त्वो जनः ।

निर्गता मक्षिका यस्मात् तत् निर्मक्षिकं स्थानम् ।

२६

कन्दुकहस्तो भास्करः ।

पत्रहस्तो हरिलालः ।

महाबलोऽयम् छात्रः ।

यष्टिपाणिरयम् चीमनलालः ।

रक्तवासा लक्ष्मणो गच्छति ।

श्यामवदनः कृष्णः गच्छति ।

शुभ्रवदन आचार्यः क्व गतः ।

नीलकुन्तला आचार्यपुत्री क्व गता ।

श्वेतवस्त्रा इयम् नारी देवकुलं याति ।

कृशोदरोऽयम् अमृतलालो दीनमुखस्तिष्ठति ।

ऊर्ध्वज्वालोऽग्निर्हविर्गृह्णाति ।

तत्रापश्यत् महात्मानं धार्तराष्ट्रं निपातितम् ।
प्रभग्नं वायुवेगेन महाशालं यथा वने ॥
भूमौ विचेष्टमानं तं रुधिरेण समुक्षितम् ।
महागजमिवारण्ये व्याघ्रेण विनिपातितम् ॥
भृकुटीकृतवक्त्रांतं क्रोधादुद्वृत्तचक्षुषम् ।
सामर्षं तं नरव्याघ्रं व्याघ्रं निपतितं यथा ॥



२७

अयमहम् पुष्पाणि चिनोमि।

एष भास्करः कुन्दपुष्पाणि चिनोति।

बालेयं बकुलपुष्पाणि चिनोति।

केयम् गोदावरीतटे शिरीषकुसुमानि चिनोति।

जानकी खल्वियम् तानि चिनोति।

कल्याणार्थी नरः पुण्यकर्माणि संचिनोति।

व्यवहारकुशलो नरो विपत्कालमुद्दिश्य धनं संचिनोति।

कांचनं लोष्टवत् पश्यन्तो जना न धनं संचिन्वन्ति।

४६

मालाकाराः चिन्वन्ति जपाकुसुमानि ।

त्वं कथं पूजाकुसुमानि न चिनोषि । किं

कथयसि । भ्रातरौ मे चिनुतः इति । न ते

युक्तमित्थं जल्पितुम् ।



२८

अयमहं वृक्षस्य शाखां धुनोमि ।

एषोऽहम् निम्बवृक्षस्य विटपम् धुनोमि ।

रामस्तालवृन्तं धुनोति ।

कुक्कुरोऽयं लाङ्गूलं धुनोति ।

एते वयं छात्राः फलपातनार्थं वृक्षशाखा धुन्मः ।

भोः कृष्णे शुनि, किमर्थं पुछं धुनोषि । किं

कथयसि : स्वल्पप्राप्तावपि लाङ्गूलचालनम-

स्माकं ज्ञातिस्वभावः इति ।

प्रस्वेदपीडिता जनास्तालवृन्तानि धुन्वन्ति ।

४८

धूनोति चम्पकवनानि धुनोत्यशोकम्

चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।

वायुर्विधूनयति चंपकपुष्परेणूं-

स्तत्कानने धवति चंदनमंजरीश्च ॥

स्रजमपि शिरस्यंधः क्षिप्तां धुनोत्यहिशंकया ।



२९

अहम् पटेन मम मुखमावृणोमि ।

अहम् वस्त्राभ्याम् मम मुखमावृणोमि ।

रामो वस्त्रेण फलकमावृणोति ।

अर्जुनः शत्रो रथं बाणैरावृणोति ।

मेघा वर्षायाम् सवितारमावृण्वन्ति ।

शिष्यो वस्त्रेण मुखं वृणोति ।

अहम् तस्य मुखाद् वस्त्रम् अपावृणोमि ।

एते छात्रास्तद् अपावृण्वन्ति ।

अहम् द्वारं संवृणोमि ।

भास्करो द्वारं संवृणोति ।

सामान्यतः भृत्यः शालाद्वाराणि संवृणोति ।

कदाचित्तु शिष्या अपि तानि संवृण्वन्ति ।

३०

अये अहम् किं शृणोमि।

त्वं घण्टानादं शृणोषि।

नहि नहि। स मेघनादं शृणोति।

भो राम, तव वचो नाहम् शृणोमि।

भो लक्ष्मण, आचार्यप्रवचनं न शृणोषि किम्।

यदि कश्चित् कर्णगतो दोषस्तत आचार्यसमीपम् तिष्ठ।

के जनाः कटु अपि हितं न शृण्वन्ति।

मूढाः कट्वपि हितं नैव शृण्वन्ति।

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति माम्।

धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते॥

आश्चर्यवत् पश्यति कश्चिदेनम्
आश्चर्यवत् वदति तथैव चान्यः।
आश्चर्यवत् चैनमन्यः शृणोति।
श्रुत्वाऽप्येनं वेद न चैव कश्चित्॥

मूढो राजा धृतराष्ट्रस्य पुत्रो
न मे वाचः पथ्यरूपाः शृणोति।
अन्तो नूनं भविताऽयम् कुरूणां
सुदारुणः सर्वहरो विनाशः॥

---

३१

भो भास्कर, इमां शिलामुद्धर ।

गुरुभारा शिलेयम् । न शक्नोमि तामुद्धर्तुम् ।

भो राम पिबेदं जलम् ।

अहह अतिशीतमिदं जलम् । न शक्नोमि
शिशिरे जलमीदृशं पातुम् ।

भो लक्ष्मण इहागच्छ । त्वां प्रहर्तुमिच्छामि

अये कः शक्नोति ममाङ्गस्पर्शनमात्रे ।

दैवमन्यथाकर्तुं साक्षाद् विधिरपि न शक्नोति ।

बहवोऽपि निःसत्त्वा मृगा एकं मृगपतिं विजेतुं
कथं शक्नुवन्ति ।

हे प्रभो, अनेन चर्मचक्षुषा त्वां द्रष्टुम् वयं
न शक्नुमः ।

मया रक्षितां मुनिधेनुं प्रहर्तुम् यमोऽपि न

शक्नोति किमुत अन्ये हिंस्राः।

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात्।

कामक्रोधोद्भवान् वेगान् स युक्तः स सुखी नरः॥

परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम्।

पुत्रस्नेहेन भगवन्जानन्नपि प्रियव्रत॥



३२

अहम् पुष्पाणि चिनोमि। भास्कर त्वमपि चिनु।

रामः कुसुमानि चिनोति। लक्ष्मण, त्वमपि
चिनु। चीमनलालोऽपि चिनोतु।

अहम् सोमम् सुनोमि। हरिरपि सुनोतु।

अहम् केतनं धुनोमि। लक्ष्मण, त्वं केतनं
धुनु। हरिलालोऽपि केतनं धुनोतु।

अधुना सर्वे शिष्याः केतनं धुन्वन्तु।

भो भास्कर, वातायनद्वारमपावृणु।

हला प्रियंवदे, उटजद्वारमपावृणु।

अद्य शिष्या अपावृण्वन्तु विनयमंदिरद्वाराणि।

भृत्या अपावृण्वन्तु प्रासादद्वाराणि।

भो लक्ष्मण, शृणु मे वचनम्

परिक्षित् शुकोपदेशं शृणोति । त्वमपि शृणु ।

शृणुत रे पौरजानपदाः, अयम् रामभद्रो
महाराज दशरथस्याज्ञया साकेतान्निर्गत्य
वनं गच्छति ।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥



२२

अहम् जलपानं करोमि ।

अहम् नमस्कारम् करोमि ।

अहम् क्रोधं करोमि ।

भास्करो जलपानं करोति ।

अयम् मृदङ्गो ध्वनिं करोति ।

अयम् पक्षी कलकलं करोति ।

एते वयं हास्यं कुर्मः ।

ईश्वरकृपा मूकं वाचालं करोति ॥

अयम् लक्ष्मणः सुरापानं करोति ।

भो लक्ष्मण, किमर्थं सुरापानं करोषि ।

सज्जना न कदापि सुरापानं कुर्वन्ति ।

साधवः सर्वेषाम् उपकारं कुर्वन्ति ।

कवि भूपालस्य कीर्तिं सर्वदिक्षु प्रतनोति ।

जामाता कन्यायाः पाणिमङ्गीकरोति ।

अग्निः सर्वं भस्मसात् करोति ।

जाड्यं धियो हरति सिंचति वाचि सत्यम् ।

मानोन्नतिं दिशति पापमपाकरोति ।

चेतः प्रसादयति दिक्षु तनोति कीर्तिं

सत्संगतिः कथय किं न करोति पुंसाम् ॥



३४

भो भास्कर, शीतम् इदम् जलम् । कुरु जलपानम् ।

भो लक्ष्मण, इदमुष्णोदकम् । तेन पादप्रक्षालनं कुरु ।

भो राम सुपक्वानीमानि बदरीफलानि । तानि स्वीकुरु इति राघवमवदत् सीता ।

भो धनिकपुत्र, धनजनयौवनगर्वं मा कुरु ।

पुत्र, अहं ते प्रीतोऽस्मि । देवो दक्षिणामूर्तिस्ते कल्याणं करोतु ।

सर्वे देवा अस्माकं मङ्गलं कुर्वन्तु ।

अथ वसन्तोत्सवप्रसंगे सर्वे छात्रा निशीथ-
समयपर्यन्तं क्रीडनम् कुर्वन्तु ।

भो भो छात्राः दुष्टजनसंगं मा कुरुत
दृढं ब्रह्मचर्यपालनं कुरुत मनोवृत्तिं च
तपःप्रधानां कुरुत, न भोगप्रधानाम् ।

---

३५

लक्ष्मण, पुष्पाणि चिनु ।

लक्ष्मणः पुष्पाणि अचिनोत् ।

राम, द्वारमपावृणु ।

रामो द्वारमपावृणोत् ।

भो भास्कर, आचार्योपदेशं शृणु ।

भास्कर आचार्योपदेशमशृणोत् ।

चन्द्रकेतु ध्वजमधुनोत् ।

बालोऽयम् शिलामुद्धर्तुम् नाशक्नोत् ।

चीमनलालो वातायनद्वारमपावृणोत् ।

अहमपि वातायनद्वारमपावृणवम् ।

मालाकारः कुसुमानि अचिनोत् ।

अहमपि तानि अचिनवम् ।

किं हरिलालः पुष्पाणि नाचिनोत् । नहि नहि ।

अहमेव एकाकी तानि अचिनवम् ।

हरिलालस्तर्हि किमकरोत् । स तु

स्वेच्छया संगीतम् अशृणोत् पादपशाखां

च अधुनोत् ।



३६

अये, अहम् कस्यचित् आर्तस्वरम् अशृणवम् ।

किं त्वम् न अशृणोः ।

अयम् भास्करः किमकरोत् ।

भास्करो मृद्भक्षणम् अकरोत् ।

त्वम् किं अकरोः ।

अहम् शिरस्ताडनम् अकरवम् ।

त्वम् किं अकरोः ।

अहम् देवपूजाम् अकरवम्

दृषदम् उद्धर्तुम् कः अशक्नोत् ।

नाहम् ताम् उद्धर्तुम् अशक्नवम् ।

सीता रामभद्रेण सहिता वनेऽपि सुखं प्राप्नोत् ।

बुघाती अजातशत्रुरिह लोके अपकीर्तिं
प्राप्नोत् ।

छात्राः क्रीडाभूमिं गत्वा किं अकुर्वन् ।

तत्र ते कन्दुकखेलनम् अकुर्वन् ।

सैनिकाः घोरं निनादमकुर्वन् ।

सर्वे छात्राः मिलिताः अपि शिलामुद्धर्तुम्
नाशक्नुवन् ।

कुरुक्षेत्रे मृताः सैनिकाः स्वर्गम् प्राप्नुवन् ।



३७

भो भास्कर, आचार्यवचनम् शृणु ।

शिष्य आचार्यवचनम् सावधानतया शृणुयात्

भो लक्ष्मण, गुरुपूजार्थं कुसुमानि चिनु ।

अन्तेवासी गुरुपूजार्थम् कुसुमानि चिनुयात् ।

सुपुत्रः कुलस्य कीर्तिं तनुयात् ।

सुजनः स्वार्थकृते नान्यम् दुनुयात् ।

गृहस्थ आपदर्थे धनरक्षणम् कुर्यात् ।

भृत्यो यथासमयं विद्यालयद्वाराण्यपावृणुयात् ।

कल्याणकामो नरः शनैः शनै र्मनोनिग्रहं कुर्यात् ।

श्रोतारः शान्तचेतसा प्रवचनमेव शृणुयुः, न कुर्युः कथाविक्षेपम् ।

वीराः समराङ्गणात् पलायनं न कुर्युः ।

ब्राह्मणाः प्राणत्यागकालेऽपि मिथ्याभाषणम् न कुर्युः ।

---

२८

भास्करहस्ते किम् अस्ति ।

भास्करहस्ते पुस्तकं अस्ति ।

मम हस्ते किम् अस्ति ।

तव हस्ते किमस्तीति न जानामि ।

त्वम् माम् जानासि किम् ।

अथ किम् । त्वम् धूर्तो माथुरः इति जानामि खलु ।

मूढः शास्त्रं न जानाति ।

पापी पुण्यबलं कथं जानाति ।

गुणिन एव गुणान् जानन्ति न निर्गुणा जनाः ।

मूर्खाः काले प्रियाणि वक्तुमपि न जानन्ति ।

जानामि धर्मं न च मे प्रवृत्तिः

जानाम्यधर्मं न च मे निवृत्तिः ।

केनापि देवेन हृदि स्थितेन

यथा नियुक्तोऽस्मि तथा करोमि ॥

---

३९

अहं क्रीडासाधनैः बालं प्रीणामि ।

यः सुचरितैः पितरं प्रीणाति स पुत्रः ।

या शीलेन भर्तारं प्रीणाति सा भार्या ।

एते छात्रा आचार्यं प्रीणन्ति ।

जमनादासः पुस्तकानां विक्रेता ।

अहम् जमनादासात् पुस्तकं क्रीणामि ।

मोहनलालः शाकापणात् शाकान् क्रीणाति ।

नरा महता पुण्यपण्येन इदं शरीरं क्रीणन्ति ।

प्रीणाति यः सुचरितैः पितरं स पुत्रो

यद

तन्मित्रम

एत

१०

अहम् रामस्य पुस्तकं मुष्णामि ।

अहम् भास्करस्य आसनं मुष्णामि ।

चोरः धनं मुष्णाति ।

मेघः जलेन वृक्षान् पुष्णाति ।

भो भास्कर, अहम् तव लेखिनीं गृह्णामि ।

वरः कन्यायाः पाणिं गृह्णाति ।

केचित् उदरंभरयः जनाः कन्यायाः शुल्कं गृह्णन्ति ।

दुःशासनः पाञ्चालीं केशेषु गृह्णाति ।

अहम् वत्सं स्तम्भे बध्नामि ।

एतौ भ्रमरौ पुष्पेभ्यः मधु गृह्णीतः ।

मालविका पुष्पाणाम् स्रजं ग्रथ्नाति ।

इमौ राजपुरुषौ अपराधिनम् वधस्तम्भे बध्नीतः ।

वासनाः पुरुषम् संसारे बध्नन्ति ।

---

৪১

रामः अपक्वफलानि अश्नाति ।

कन्यकाः मणिमालाः ग्रथ्नन्ति ।

साधुः दर्शनमात्रेण पुनाति ।

आवाम् वृक्षशाखां लुनीवः ।

वाताः वृक्षान् धुनन्ति ।

तीर्थोदकं पापिनं पुरुषं पुनाति ।

वानराः लताः लुनन्ति ।

उपवासदिने न किंचित् अश्नामि ।

चोराः प्रासादात् धनं मुष्णन्ति ।

अहम् पुष्पैः भूमिम् आस्तृणामि ।

पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ।

१२

इदं पुस्तकं गृहाण ।

इदं आसनं गृहाण ।

अमुं कंदुकं गृहाण ।

रामः इदं पारितोषिकं गृह्णातु ।

लक्ष्मणः इमाम् मालाम् गृह्णातु ।

भो भो ब्राह्मणाः, मम यज्ञे भूयसीं दक्षिणां गृह्णीत ।

के पुस्तकम् गृह्णन्तु ।

भास्कररामलक्ष्मणाः पुस्तकम् गृह्णन्तु ।

काका बलिं गृह्णन्तु ।

तदेषा भवतः कान्ता त्यजैनां वा गृहाण वा ।

उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥

---

१२

इदं वस्त्रं फलके बधान।

इमाम् अजां रज्ज्वा बधान।

अस्मिन् वृक्षे मृगं बधान।

भास्करः तम् बध्नातु।

लक्ष्मणः तम् बध्नातु।

भो भो ब्राह्मणाः अस्मिन् यज्ञे मा खलु भवन्तः
निरपराधिनः पशून् बध्नन्तु वधस्तंभे।
न हिंसा किंचिदपि पुण्यमावहति।

सागरं मथ्नन्तु देवाः।

भो भो स्तेन, मा मुषाण मम अजाम्। यदि
तां वाञ्छसि, स्वल्पमूल्येनापि क्रीणीहि।

भो भो मर्कट, अस्मिन् उपवने वृक्षं मा लुनीहि ।

भो भो मालाकार, बकुलपुष्पाणां मालां अद्यैव प्रथान । अन्ये सर्वे कुंदानां मालाः प्रथ्नन्तु ।

४१

को मम हस्तात्कन्दुकमगृह्णात् ।

अहं तव हस्तात्कन्दुकमगृह्णाम् ।

को लक्ष्मणासनात्पुस्तकमगृह्णात् ।

भास्करो लक्ष्मणासनात् पुस्तकमगृह्णात् ।

गां कोऽत्र स्तम्भेऽबध्नात् ।

गोपालोऽत्र स्तम्भे गामबध्नात् ।

अद्य छात्रा वस्तुविक्रेतुरापणात् कान् पदार्थान् अक्रीणन् ।

हरिदासादयोऽद्य तैलम्, घृतम्, सैन्धवम्, संमार्जनीः अन्यांश्च विविधपदार्थान् अक्रीणन् ।

इमे रामाः अद्य पुष्पमालाः अग्रथ्नन् ।

ब्राह्मणा यज्ञस्तंभे पशुम् अबध्नन् ।

---

४५

अयम् एकः कन्दुकः ।

इमौ द्वौ कन्दुकौ ।

इमे त्रयः कन्दुकाः ।

इमे चत्वारः शिष्याः ।

इमानि चत्वारि पुस्तकानि ।

इमानि त्रीणि कुसुमानि ।

इमे पञ्च दण्डाः ।

इमे षड् तालवृन्ताः ।

कति इमे वृक्षाः ।

सप्त इमे वृक्षाः ।

अष्टौ इमे स्तम्भाः ।

नव इमे ग्रहाः

दश एतानि कमलानि ।

सप्त एतानि पत्राणि ।

षड् एतानि बिल्वफलानि ।

पंच एता अङ्गुलयः ।

पंच एतानि शास्त्राणि ।

चत्वार इमे भ्रातरो यूयम् विवाहदीक्षिता इत्यवदत् सीता ।

तिस्रो वयम् भगिन्यः ।

चतस्रो दिशः पूर्वपश्चिमदाक्षिणोत्तराः ।

चतुर्भि वेदैः जगत् व्याप्नोति वेधाः ।

नवभिस्तन्तुभिर्युक्तं इदम् मे उपवीतम् ।

षण्णाम् शास्त्राणाम् मध्ये वेदान्तशास्त्रमेव

समीचीनम् कल्याणवहं च यथार्थतः ।

चतसृणाम् मम कन्यकानां मध्ये एका एव बधिरा न तु सर्वाः ।

अनयो र्द्वयो र्वृक्षयो र्मध्ये कः खलु प्रच्छायतरः ।

त्रिषु लोकेषु तस्य यशः प्रथितम् ।



४६

पुरा किल दशरथो नाम राजा बभूव। रामलक्ष्मणभरतशत्रुघ्नाश्चत्वारस्तस्य पुत्रा बभूवुः। राक्षसत्रासितो विश्वामित्र एकदा साकेतम् आजगाम राजानं चोवाच, 'राजन्, राक्षसपीडिता वयम् त्वाम् शरणागताः। रामं मया सह प्रेषय तद्वधार्थम्।' रामो कनीयसा भ्रात्रा लक्ष्मणेन सह विश्वामित्राश्रमं जगाम तत्र च तपोविघ्नकरान् राक्षसान् जघान। अत्रैव रामस्ताटकाम् ददर्श। तां दृष्ट्वा विश्वामित्रेण आज्ञप्तः स ताम् प्रति बाणान् मुमोच तस्या नासिकां च चिच्छेद। राक्षसान् सर्वान् हत्वा ते सर्वे मिथिलां जग्मुः।

पुरा किलेदमेव वनं दुष्यन्तो नाम राजा आजगाम । एकं पलायमानं मृगमनुसरन् दुष्यन्तो दिव्यमिदमाश्रमपदं ददर्श ।

धृष्टद्युम्नः संग्रामे द्रोणस्य शीर्षच्छेदं चकार ।

पांडवाः शिबिराणि त्यक्त्वा समरांगणं जग्मुः शत्रूंश्च शतशो जघ्नुः ।

ततो दिलीपो गुरुधेनौ स्थितं केसरिणं ददर्श ।



४७

द्वौ सूपौ ओदनं पेचतुः ।

पाचका अस्मद्गृहे शाकान् न पेचुः ।

ततः पाण्डवा अरण्यं विविशुः ।

एकदा वातायनस्थोऽहं दूरात् आर्तनादं शुश्राव ।

समरे अर्जुनमुख्याः पाण्डवसैनिकाः पर्वता इव तस्थुः ।

ततो राधेयः कुरुसेनाम् समरं निनाय ।

एतदंतरे असुराः 'स्नानं कृत्वा वयम् झटिति पिबामोऽमृतम्' इति कृत्वा स्नानार्थं जग्मुः ।

पश्चात् दिलीपम् कुशलं पप्रच्छ वशिष्ठः ।
तत् श्रुत्वा सर्वे सभ्याश्चित्रलिखिता इव बभूवुः ।

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतु र्भुवनद्वयम् ॥

४८

पंपातीरे राघवः पक्षिणां विरावं शुश्राव ।

दुःशासनं भूमौ निक्षिप्य भीमस्तद्रुधिरं पपौ।

ऋषिभिः पृष्टा सावित्री सर्ववृत्तान्तं कथयां-

चकार ।

हिरण्यकशिपुः नाम असुरः देवान् भृशं

पीडयांचकार ।

स व्याधसुतः कस्मैचिदपि न न्यूनं ददौ ।

सर्वान् पदार्थान् यथावत् तोलयांचकार ।

भीमः कीचकं मुष्टिभिस्ताडयांचकार ।

देवाः सागरं गत्वा विष्णुं प्रार्थयांचक्रुः ।

उदधिमंथनकाले सागरादुद्भूतं हालाहलं कः पपौ । किं देवाः तत् पपुः किं वा राक्षसाः । न खलु न खलु । देवानामपि देवस्तत् स्वकंठे दधौ ।

अयं गोपशिशुः कालीयं हत्वा तस्य मस्तकस्योपरि रेमे ।

४९

अपि एतत् तपोवनम् ।

अपि ज्ञायते कतमेन दिग्भागेन गतः स
जाल्मः इति ।

अपि क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे
शरीरमाद्यं खलु धर्मसाधनम् ।

युष्माकं तीर्थजलानि शिवानि कच्चित् ।

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनंजय ॥

भो पार्वति, इदमुग्रं तपः क्व तावकं कोमलं च
वपुः क्व ।

८५

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

क्व बत हरिणकानां जीवितं चातिलोलम् ।
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥

चिन्तया आत्मानमपि नैषा विभावयति किं
पुनरागंतुकम् ।

ऋषिप्रभावान्मयि नांतकोऽपि
प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ।

एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥



५०

वरं मौनं कार्यं न च वचनमुक्तं यदनृतम्

वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् ।

वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचि

वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥

वरमेको गुणी पुत्रो न च मूर्खशतानि च ।

एकश्चन्द्रस्तमो हन्ति न हि तारागणोऽपि वा ॥

अविनीत, किं न सत्त्वानि विप्रकरोषि ।

हंत वर्धते ते संरम्भः। स्थाने खलु ऋषिजनेन

सर्वदमन इति कृतनामधेयाऽसि ।

स्थाने हृषीकेश तव प्रकीर्त्या

जगत्प्रहृष्यत्यनुरज्यते च ।

"

रक्षांसि भीतानि दिशो द्रवन्ति

सर्वे नमस्यंति च सिद्धसंघाः ॥

दिष्ट्या प्रतिहतम् अमंगलम् ।

दिष्ट्या परित्रातो भवान् देव्या ।

दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन

चायुष्मान् वर्धते ।



५१

प्रयाणे च ततः कर्णो हर्षयन् वाहिनीं तव ।
एकैकं समरे दृष्ट्वा पांडवान्पर्यपृच्छत ॥
यो मामद्य महात्मानं दर्शयेच्छ्वेतवाहनम् ।
तस्मै दद्यामभिप्रेतं धनं यन्मनसेच्छति ॥
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं चास्मै पुनर्दद्यां सौवर्णं हस्तिषड्गवम् ॥
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां वैश्यग्रामांश्चतुर्दश ॥
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत्स्वयम् ॥
हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात्केशवार्जुनौ ॥
एता वाचः सुबहुशः कर्ण उच्चारयन्युधि ॥

विकत्थमानं च तदा राधेयमरिकर्षणम् ।
मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ॥

शल्य उवाच

मा सूतपुत्र दानेन सौवर्णं हस्तिषड्गवम् ।
प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनंजयम् ॥
बाल्यादिह त्वं त्यजसि वसु वैश्रवणो यथा ।
अयत्नेनैव राधेय द्रष्टास्यद्य धनंजयम् ॥
यत्त्वं प्रेरयसे वित्तं बहु तेन खलु त्वया ।
शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ॥
यच्च प्रार्थयसे हंतुं कृष्णौ मोहाद्वृथैव तत् ।
न हि शुश्रुम संमर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥
अप्रार्थितं प्रार्थयसे सुहृदो न हि संति ते ।
ये त्वां निवारयंत्याशु प्रपतंतं हुताशने ॥
सहितः सर्वयौधैस्त्वं व्यूढानीकैः सुरक्षितः ।
धनंजयेन युध्यस्व श्रेयश्चेत्प्राप्तुमिच्छसि ॥

हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया ।
श्रद्धत्स्वैवं मया प्रोक्तं यदि तेऽस्ति जिजीविषा ॥

कर्ण उवाच

स्वबाहुवीर्यमाश्रित्य प्रार्थयाम्यर्जुनं रणे ।
त्वं तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि ॥
इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः ।
चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥

शल्य उवाच

ईषादन्तं महानागं प्रभिन्नकरटामुखम् ।
शशको ह्वयसे युद्धे कर्ण पार्थं धनंजयम् ॥
सिंहं केसरिणं क्रुद्धमतिक्रम्याभिनर्दसे ।
शृगाल इव मूढस्त्वं नृसिंहं कर्ण पांडवम् ॥
महामेघं महाघोरं दर्दुरः प्रतिनर्दसि ।
कामतोयप्रदं लोके नरपर्जन्यमर्जुनम् ॥

यथा च स्वगृहस्थः श्वा व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनंजयम् ॥

कर्ण उवाच

गुणान्गुणवतां शल्य गुणवान्वेत्ति नागुणः ।
त्वं तु शल्य गुणैर्हीनः किं ज्ञास्यसि गुणागुणम् ॥
अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान् ।
अहं शल्याभिजानामि विक्रमं च महात्मनः ॥
तथा कृष्णस्य माहात्म्यं ऋषभस्य महीक्षिताम् ।
यथाहं शल्य जानामि न त्वं जानासि तत्तथा ॥
एवमेवात्मनो वीर्यमहं वीर्यं च पांडव ।
जानन्नेवाह्वये युद्धे शल्य गांडीवधारिणम् ॥
अस्ति चायमिषुः शल्य सुपुंखो रक्तभोजनः ।
एकतूणीशयः पत्री सुधौतः समलंकृतः ॥
शेते चंदनचूर्णेषु पूजितो बहुलाः समाः ।

आहेयो विषवानुग्रो नराश्वाद्विपसवहाः ॥
घोररूपो महारौद्रस्तनुत्रास्थिविदारणः ॥
तेनाहमिषुणा शल्य वासुदेवधनंजयौ ।
योत्स्ये परमसंक्रुद्धस्तत्कर्म सदृशं मम ॥
सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाडुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥
तावेतौ पुरुषव्याघ्रौ समेतौ स्यंदने स्थितौ ।
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ॥
त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ।
भयावदीर्णः संत्रासादबद्धं बहु भाषसे ॥
संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ।
तौ हत्वा समरं हंता त्वामद्य सहबांधवम् ॥
ममैष प्रथमः कल्पो निधने स्वर्गमिच्छतः ।
सोऽयं प्रियः सखा चास्मि धार्तराष्ट्रस्य धीमतः ॥

तदर्थे हि मम प्राणा यच्च मे विद्यते वसु ॥
व्यक्तं त्वमप्युपहितं पांडवैः पापदेशज ।
यथा चामित्रवत्सर्वं त्वमस्मासु प्रवर्तसे ॥
न तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रप ।
यो मामस्मादभिप्रायाद्वारयेदिति मे मतिः ॥
एवं विद्वन् जोषमास्व त्रासात् किं बहु भाषसे ॥

शल्य उवाच

जातोऽहं यज्वनां वंशे संग्रामेष्वनिवर्तिनाम् ।
राज्ञां मूर्धाभिषिक्तानां स्वयं धर्मपरायणः ॥
यथैव मत्तो मद्येन त्वं तथा लक्ष्यसे वृष ।
तथाद्य त्वां प्रमाद्यंतं चिकित्सेयं सुहृत्तया ॥
इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे ।
श्रुत्वा यथेष्टं कुर्यास्त्वं निहीन कुलपांसन ॥
वैश्यः किल समुद्रांते प्रभूतधनधान्यवान् ।

यज्वा दानपतिः क्षांतः स्वकर्मस्थोऽभवच्छुचिः ॥
पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम् ।
काको बहूनामभवदुच्छिष्टकृतभोजनः ॥
तस्मै सदा प्रयच्छंति वैश्यपुत्राः कुमारकाः ।
मांसोदनं दधिक्षीरं पायसं मधुसर्पिषी ॥
स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः ।
सदृशान्पक्षिणो दृप्तः श्रेयसश्चाधिचिक्षिपे ॥
अथ हंसा समुद्रान्ते कदाचिदतिपातिनः ।
गरुडस्य गतौ तुल्याश्चक्रांगा हृष्टचेतसः ॥
तान्सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति ।
तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् ।
समाह्वयत दुर्बुद्धिः पताव इति पक्षिणम् ॥

हंसा ऊचुः

कथं हंसं नु बलिनं चक्रांगं दूरपातिनम् ।

काको भूत्वा निपतने समाह्वयसि दुर्मते ॥

कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् ॥

अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ॥

प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ॥

काक उवाच

शतमेकं च पातानां पतितास्मि न संशयः ॥

शतयोजनमेकैकं विचित्रं विविधं तथा ॥

उड्डीनमवडीनं च प्रडीनं डीनमेव च ।

निडीनमथ संडीनं तिर्यग्डीनगतानि च ॥

गतागतं प्रतिगतं बह्वीश्च निकुलीनकाः ।

कर्तास्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलम् ॥

एवमुक्ते तु काकेन प्रहस्यैको विहंगमः ।

उवाच काकं राधेय वचनं तन्निबोध मे ॥

## हंस उवाच

शतमेकं च पातानां त्वं काक पतिता ध्रुवम् ।
एकमेव तु यं पातं विदुः सर्वे विहंगमाः ।
तमहं पतिता काक नान्यं जानामि कंचन ।
अथ काकाः प्रजहसुर्ये तत्रासन्समागताः ।
कथमेकेन पातेन हंसः पातशतं जयेत् ॥
प्रपेततुः स्पर्धया च ततस्तौ हंसवायसौ ।
एकपाती च चक्रांगः काकः पातशतेन च ॥
अथ काकस्य चित्राणि पतितानि मुहुर्मुहुः ।
दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैः स्वरैः ॥
वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतंत्युत्पतंति च ।
कुर्वाणा विविधान्नादानाशंसंतो जयं तथा ॥

अवमन्य च हंसांस्तानिदं वचनमब्रुवन् ।
योऽसावुत्पतितो हंसः सोऽसावेवं प्रहीयते ॥

अथ हंसः स तच्छ्रुत्वा प्रापतत्पश्चिमां दिशम् ।
उपर्युपरि वेगेन सागरं मकरालयम् ॥

ततो भीः प्राविशत्काकं तदा तत्र विचेतसम् ।
द्वीपद्रुमानपश्यंतं निपातार्थं श्रमान्वितम् ॥

तं तथा हीयमानं तु हंसो दृष्ट्वाब्रवीदिदम् ।
उज्जिहीर्षु र्निमज्जंतं स्मरन् सत्पुरुषव्रतम् ॥

हंस उवाच

बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः ।
किं नाम पतितं काक यत्वं पतसि सांप्रतम् ॥

जलं स्पृशसि पक्षाभ्यां तुंडेन च पुनः पुनः ।
प्रब्रूहि कतमे तत्र पाते वर्तसि वायस ॥

अपश्यन्नंभसः पारं निपतंश्च श्रमान्वितः ॥
पातवेगप्रमथितो हंसं काकोऽब्रवीदिदम् ॥

काक उवाच

वयं काका कुतो नाम चरामः काकवाशिकाः ।
हंस प्राणैः प्रपद्ये त्वमुदकांतं नयस्व माम् ॥
उच्छिष्टदर्पितो हंस मन्येऽत्मानं सुपर्णवत् ।
अवमन्य बहूंश्चाहं काकानन्यांश्च पक्षिणः ॥
यद्यहं स्वतिमान्हंस स्वदेशं प्राप्नुयां विभो ।
न कंचिदवमन्येऽहमापदो मां समुद्धर ॥
तमेवंवादिनं दीनं विलपंतमचेतनम् ।
कृपयादाय हंसस्तं जलक्लिन्नं सुदुर्दृशम् ॥
पद्भ्यामुत्क्षिप्य वेगेन पृष्ठमारोपयच्छनैः ॥
आरोप्य पृष्ठं हंसस्तं काकं तूर्णं विचेतनम्

आजगाम पुनर्द्वीपं स्पर्धया पेततुर्यतः ॥
संस्थाप्य तं चापि पुनः समाश्वास्य च खेचरम् ।
गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः ।
सदृशाञ्छ्रेयसश्चापि सर्वान्कर्णावमन्यसे ॥
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः ।
विराटनगरे पार्थमेकं किं नावधीस्तदा ॥
सततं च त्वमश्रौषीर्वचनं द्रोणभीष्मयोः ।
अवध्यौ वदतोः कृष्णौ सन्निधौ च महीक्षिताम् ॥
इदानीमेव द्रष्टासि प्रधाने स्यंदने स्थितौ ।
पुत्रं च वसुदेवस्य कुंतीपुत्रं च पांडवम् ॥
यदा शरशतैः पार्थो दर्पं तव वधिष्यति ।
तदा त्वमंतरं द्रष्टा आत्मनश्चार्जुनस्य च ॥

कर्ण उवाच

यत्त्वं निदर्शनार्थं मा शल्य जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे ॥
नीचस्य बलमेतावत्पारुष्यं यत्त्वमात्थ माम् ।
अशक्तो मद्गुणान्वक्तुं वल्गसे बहु दुर्मते ॥
सखिभावेन सौहार्दान्मित्रभावेन चैव हि ।
कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि सांप्रतम् ॥
कृतश्च समयः पूर्वं क्षंतव्यं विप्रियं तव ।
ऋते शल्यसहस्रेण विजयेयमहं परान् ॥
ततो दुर्योधनो राजा कर्णशल्याववारयत् ।
सखिभावेन राधेयं शल्यं स्वांजल्यकेन च ॥

ततोऽवतीर्य राधेयो रथादाशु समुद्यतः ।
चक्रं भुजाभ्यामालंब्य समुत्क्षेप्तुमियेष सः ॥
ग्रस्तचक्रस्तु राधेयः क्रोधादश्रूण्यवर्तयत् ।
अर्जुनं वीक्ष्य संरब्धमिदं वचनमब्रवीत् ॥
भो भो पार्थ महेष्वास मुहूर्तं परिपालय ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ॥
न त्वं कापुरुषाचीर्णं मार्गमास्थातुमर्हसि ।
ख्यातस्त्वमसि कौंतेय विशिष्टो रणकर्मसु ॥
शरणागते न्यस्तशस्त्रे याचमाने तथार्जुन ।
अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ॥
न विमुंचंति शस्त्राणि शूराः साधुव्रते स्थिताः ।
त्वं च शूरतमो लोके साधुवृत्तश्च पांडव ॥
यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज ।
न मां रथस्थो भूमिष्ठं विकलं हंतुमर्हसि

तमब्रवीद्वासुदेवो रथस्थो
राधेय दिष्ट्या स्मरसीह धर्मम् ।
प्रायेण नीचा व्यसनेषु मग्ना
निन्दन्ति दैवं कुकृतं न तु स्वम् ॥

यद् द्रौपदीमेकवस्त्रां सभायाम्
आनाययेस्त्वं च सुयोधनश्च ।
दुःशासनः शकुनिः सौबलश्च
न ते कर्ण प्रत्यभात्तत्र धर्मः ॥

यदा सभायां राजानमनक्षज्ञं युधिष्ठिरम् ।
अजैषीच्छकुनिर्ज्ञानात् क्व ते धर्मस्तदा गतः ॥

वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे ।
न प्रयच्छसि यद्राज्यं क्व ते धर्मस्तदा गतः ॥

यद्वारणावते पार्थान् सुप्तान् जतुगृहे तदा ।
आदीपयस्त्वं राधेय क्व ते धर्मस्तदा गतः ॥

यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम् ।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः ॥

राज्यलुब्धः पुनः कर्ण समाह्वयसि पांडवान् ।
यदा शकुनिमाश्रित्य क्व ते धर्मस्तदा गतः ॥

यदाभिमन्युं बहवो युद्धे जघ्नुर्महारथाः ।
परिवार्य रणे बालं क्व ते धर्मस्तदा गतः ॥

यद्येष धर्मस्तत्र न विद्यते हि
किं सर्वथा तालुविशोषणेन ।
अद्येह धर्म्याणि विधत्स्व सूत
तथापि जीवन्न विमोक्ष्यसे हि ॥

एवमुक्तस्तदा कर्णो वासुदेवेन भारत ।
लज्जयाऽवनतो भूत्वा नोत्तरं किंचिदुक्तवान् ॥

क्रोधात्प्रस्फुरमाणौष्ठो धनुरुद्यम्य भारत ।
योधयामास वै पार्थं महावेगपराक्रमः ॥

ततोऽब्रवीद्वासुदेवः फाल्गुनं पुरुषर्षभम् ।
दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबल ॥

एवमुक्तस्तु देवेन क्रोधमागात्तदार्जुनः ।
तस्य क्रुद्धस्य सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः ।
प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत् ॥

तत्समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनंजयम् ।
अभ्यवर्षत्पुनर्यत्नमकरोद्रथसज्जने ॥

ब्रह्मास्त्रेणैव तं पार्थो ववर्ष शरवृष्टिभिः ।
तदस्त्रमस्त्रेणावार्य प्रजहार च पांडवः ॥

अथ त्वरन्कर्णवधाय पार्थो
महेन्द्रवज्रानलदंडसन्निभम् ।
आदत्त पार्थोऽञ्जलिकं निषंगात्
सहस्ररश्मेरिव रश्मिमुत्तमम् ॥

ततोऽर्जुनस्तस्य शिरो जहार
  वृत्रस्य वज्रेण यथा महेन्द्रः ।
शरोत्तमेनांजलिकेन राजन्
  तदा महास्त्रप्रतिमंत्रितेन ॥
पार्थोऽपराह्णे शिर उच्चकर्त
  वैकर्तनस्याथ महेन्द्रसूनुः ।
वरांगमुर्व्यामपतच्चमूमुखे
  दिवाकरोऽस्तादिव रक्तमंडलः ॥
ततः शंखान्पांडवा दध्मुरुच्चै-
  र्दृष्ट्वा कर्णं पातितं फाल्गुनेन ॥
प्रताप्य सेनां स तु पांडवीं रणे
  शरांशुभिर्भास्करतुल्यदीधितिः ।
किरीटिकालेन सुवर्णभास्करो-
  ऽप्यनीयतास्तं दिवसावसाने ॥

कर्णं तु शूरं पतितं पृथिव्यां
  शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराज–
  श्छिन्नध्वजेनाथ ययौ रथेन ॥

हते कर्णे कुरवः प्राद्रवंत
  भयार्दिता गाढविद्धाश्च संख्ये ।
अवेक्षमाणा मुहुरर्जुनस्य
  ध्वजं महांतं वपुषा ज्वलंतम् ॥

निपातितस्यंदनवाजिनागं
  बलं च दृष्ट्वा हतसूतपुत्रम् ।
दुर्योधनोऽश्रुपरिपूर्णनेत्रो
  दीनो मुहुर्निश्वसंश्चार्तरूपः ॥

कर्णं तु शूरं पतितं पृथिव्यां
  शराचितं शोणितदिग्धगात्रम् ।

यदृच्छया सूर्यमिवावनिस्थं

दिदृक्षवः संपरिवार्य तस्थुः ॥

भीमश्च भीमेन तदा स्वनेन

नादं कृत्वा रोदसी कंपमानः ।

आस्फोटयन् वल्गते नृत्यते च

हते कर्णे त्रासयन् धार्तराष्ट्रान् ।

मद्राधिपश्चापि विमूढचेता-

स्तूर्णं रथेनापकृतध्वजेन ।

दुर्योधनस्यांतिकमेत्य राजन्

सबाष्पदुःखाद् वचनं बभाषे ॥

विशीर्णनागाश्वरथप्रवीरं

बलं त्वदीयं यमराष्ट्रकल्पम् ॥

अन्योन्यमासाद्य हतं महद्भि-

र्नराश्वनागैर्गिरिकूटकल्पैः ॥

नैतादृशं भारत युद्धमासीत्

यथा तु कर्णार्जुनयोर्बभूव ।

ग्रस्तौ हि कर्णेन समेत्य कृष्णा

वन्ये च सर्वे तव शत्रवो ये ॥

दैवं ध्रुवं पार्थवशात्प्रवृत्तं

यत्पांडवान्पाति हिनस्ति चास्मान् ।

तवार्थसिद्धयर्थकराश्च सर्वे

प्रसह्य वीरा निहता द्विषद्भिः ॥

वीर्येण शौर्येण बलेन तेजसा

तैस्तैस्तु युक्ता विविधैर्गुणौघैः ।

अवध्यकल्पा निहता नरेन्द्रा–

स्तवार्थकामा युधि पांडवेयैः ॥

तन्मा शुचो भारत दिष्टमेतत्

पर्याश्वस त्वं न सदास्ति सिद्धिः ।

एतद्वचो मद्रपतेर्निशम्य
स्वं चापनीतं मनसा निरीक्ष्य ।
दुर्योधनो दीनमना विसंज्ञः
पुनः पुनर्न्यश्वसदार्तरूपः ।
तं द्रोणपुत्रप्रमुखा नरेन्द्राः
सर्वे समाश्वास्य मुहुः प्रयान्ति ॥

वधेन कर्णस्य तु दुःखितास्ते
हा कर्ण हा कर्ण इति ब्रुवाणाः ।
द्रुतं प्रयाताः शिबिराणि राजन्
दिवाकरं रक्तमवेक्ष्यमाणाः ॥

कर्णस्य देहं रुधिरावसिक्तं
भक्तानुकंपी भगवान्विवस्वान् ।
स्पृष्ट्वांशुभिर्लोहितरक्तरूपः
सिस्नासुरभ्येति परं समुद्रम् ॥

शरसंकृत्तवर्माणं रुधिरोक्षितवाससम् ।
गतासुमपि राधेयं नैव लक्ष्मीर्विमुंचति ॥

तथा निपातिते कर्णे परसैन्ये च विद्रुते ।
आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत् ॥

हतो वज्रभृता वृत्रस्त्वया कर्णो धनंजय ।
वृत्रकर्णवधं घोरं कथयिष्यंति मानवाः ॥

तमिमं विक्रमं लोके प्रथितं ते यशस्करम् ।
निवेदयावः कौंतेय कुरुराजस्य धीमतः ॥

पार्थमादाय गोविंदो ददर्श च युधिष्ठिरम् ।
शयानं राजशार्दूलं कांचने शयनोत्तमे ॥

अगृह्णीतां च मुदितौ चरणौ पार्थिवस्य तौ ।
तयोः प्रहर्षमालक्ष्य हर्षादश्रूण्यवर्तयत् ॥

कृष्ण उवाच

हतो वैकर्तनो राजन्सूतपुत्रो महारथः ।
दिष्टया जयसि राजेन्द्र दिष्टया वर्धसि भारत ॥
यस्तु द्यूतजितां कृष्णां प्राह सत्पुरुषाधमः ।
तस्याद्य सूतपुत्रस्य भूमिः पिबति शोणितम् ॥
इति श्रुत्वा वचस्तस्य केशवस्य महात्मनः ।
धर्मपुत्रः प्रहृष्टात्मा दाशार्हं वाक्यमब्रवीत् ॥
नैतच्चित्रं महाबाहो त्वयि देवकिनंदन ।
त्वया सारथिना पार्थो यत्नवानहनच्च तम् ॥
इत्युक्त्वा धर्मराजस्तु रथं हेमविभूषितम् ।
आस्थाय पुरुषव्याघ्र स्वबलेनाभिसंवृतः ।
प्रययौ स महाबाहुर्द्रष्टुमायोधनं तदा ॥

गंधतैलावसिक्ताभिः कांचनीभिः सहस्रशः ॥
दीपिकाभिः कृतोद्योतं पश्यंते वै वृषं तदा ॥

सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
संजातप्रत्ययोऽतीव वीक्ष्य चैवं पुनः पुनः ॥

अद्य राजास्मि गोविंद पृथिव्यां भ्रातृभिः सह ।
त्वया नाथेन वीर्येण विदुषा परिपालितः ॥

त्वत्प्रसादाद्वयं चैव कृतार्थाः पुरुषर्षभ ।
दिष्ट्या जयसि गोविंद दिष्ट्या शत्रुर्निपातितः ॥

स्वप्स्यामोऽद्य सुखं रात्रौ त्वत्प्रसादान्महाभुज ।
एवं स बहुशो राजा प्रशशंस जनार्दनम् ॥

---